રોગાઃ નિરૂપાયણાઃ ॥ તેષાં નિર્મૂળનાશાય તિલમિશાનમર્પયેત્ ॥ શ્રી૦ કૃષ્ણતિલાર્પણં પછી અડધી પ્રદક્ષિણા ફેરવવી. યાનિ કાનિ ચ પાપાનિ જન્માન્તરકૃતાનિ ચ ॥ તાનિ સર્વાણિ નશ્યંતિ પ્રદક્ષિણાં પદે પદે ॥ શ્રી૦ અર્ધ પ્રદક્ષિણાં ॥

## મંત્રપુષ્પાંજલિ.

હાથમાં ફુલબીલ લેવાં. દક્ષોત્સંગનિષણ્ણ કુંજરમુખં પ્રેમણા કરેણુ સ્પૃશન્ વામોરૂસ્થિત-વલ્લભાંકવિલસત્સ્કંદં કરેણામૃશન્ ॥ ઇષ્ટા-ભીતિમનોહરં કરયુગં બિભ્રત્ પ્રસન્નાનનો ભુયાન્નઃ શરદિન્દુસુન્દરતનુઃ શ્રેયસ્કરઃ શંકરઃ ॥ શ્રી૦ મંત્રપુષ્પાંજલિ ॥

## નસ્મકારમ્.

નમઃ સર્વહિતાર્થાય જગદાધારહેતવે ॥ સાષ્ટાંગોયં પ્રણામસ્તે પ્રયત્નેન મયા કૃતઃ ॥

શ્રી૦ સાષ્ટાંગ નમસ્કાર ॥ પછી પંચાક્ષર મંત્રનો ( ૧૩૮--૧૦૮ ) પોતાથી બને તેટલો જપ કરવો. અને, યથાશક્તિ જપકૃતેન શ્રી-સાંબસદાશિવઃ પ્રીયતાં ન મમ॥(પાણી મૂકવું.)

## પ્રાર્થના.

પછી યથાશકિત માનસિક સ્તોત્ર વિગેરેથી સ્તુતિ કરવી, પછી હાથ જોડવા ॥ ત્વમેવ માતા ચ પિતા ત્વમેવ ત્વમેવ બંધુશ્ચ સખા ત્વમેવ ॥ ત્વમેવ વિદ્યા દ્રવિણં ત્વમેવ ત્વમેવ શરણં મમ દેવ દેવ ॥ ૨ ॥ આવાહનં ન જાનામિ ન જાનામિ તવાર્ચનં ॥ પૂજાં ચૈવ ન જાનામિ ક્ષમસ્વ પરમેશ્વર ॥ અપરાધસ-હસ્રાણિ ક્રિયંતેઽહર્નિશં મયા ॥ દાસોય-મિતિ માં મત્વા ક્ષમસ્વ પરમેશ્વર ॥ સાપ-રાધોઽસ્મિ શરણં પ્રાપ્તસ્ત્વાં જગદીશ્વર ॥ ઈદાનીમનુકમ્પ્યોહં યથેચ્છસિ તથા કુરૂ ॥ અજ્ઞાનાદ્વિસ્મૃતેર્ભ્રાન્ત્યા અન્-યુનમધિકં કૃતં ॥

તત્સર્વં ક્ષમ્યતાં દેવ પ્રસીદ પરમેશ્વર ॥ શ્રી૰ ક્ષમાપનં સ૰ ॥

## અર્પણમ્.

હાથમાં પાણી લઈ અને યથાશક્તિ સપરિવારસાંબસદાશિવપૂજનેન શ્રીસાંબસદાશિવ પ્રીયતાં ન મમ ॥



# अभिलाषाष्टकं शिवस्तोत्रम्



विश्वानर उवाच ॥ एकं ब्रह्मैवाद्वितीयं समस्तं सत्यं सत्यं नेह नानास्ति किञ्चित् ॥ एको रुद्रो न द्वितीयोऽवतस्थे तस्मादेकं त्वां प्रपद्ये महेशम् ॥१॥ एकः कर्ता त्वं हि विश्वस्य शंभो नानारूपेष्वेकरूपोऽस्यरूपः ॥ यद्वत्प्रत्यर्क एकोप्यनेकस्तस्मादेकं त्वां प्रपद्ये महेशम् ॥२॥ रज्जौ सर्पः शुक्तिकायां च रौप्यं नैरः पूरस्तन्मृगाख्ये मरीचौ ॥ यद्वत्तद्वद्विष्वगेष प्रपञ्चो यस्मिन् ज्ञाते तं प्रपद्ये महेशम् ॥३॥ तोये शैत्यं दाहकत्वं च वन्हौ तापो भा-

नौ शीतभानौ प्रसादः ॥ पुष्पे गन्धो
दुग्धमध्ये च सर्पिर्यत्तच्छंभो त्वं ततस्त्वां
प्रपद्ये ॥ ४ ॥ शब्दं गृह्णास्यश्रवास्त्वं हि
जिघ्रेरघ्राणस्त्वं व्यङ्घ्रिराजासि दूरात् ॥
व्यक्षः पश्येस्त्वं रसज्ञोप्यजिह्वः कस्त्वां
सम्यग्वेत्त्यतस्त्वां प्रपद्ये ॥५॥ नो वेद-
स्त्वामीश साक्षाद्धि वेदो नो वा विष्णु-
र्नो विधाताखिलस्य ॥ नो योगीन्द्रा ने-
न्द्रमुख्याश्च देवा भक्तो वेदत्वामतस्त्वां
प्रपद्ये ॥६॥ नो ते गोत्रं नापि जन्मापि
नाख्या नो वा रूपं नैव शीलं न देशः॥
इत्थंभूतोऽपीश्वरस्त्वं त्रिलोक्याः सर्वान्का-
मान्पूरयेस्तद्भजेत्वाम् ॥७॥ त्वत्तः सर्वं
त्वं हि सर्वं स्मरारे त्वं गौरीशस्त्वं च

नम्रोऽतिशान्तः ॥ त्वं वै वृद्धस्त्वं युवा त्वं च भालस्तत्किंयत्त्वं नास्त्यतस्त्वां नतोऽस्मि ॥ ८ ॥ स्तुत्वेति भूमौ निपपात विप्रः स दण्डवद्यावदतीव हृष्टः ॥ तावत्स बालोऽखिलवृद्धवृद्धः प्रोवाच भूदेव वरं वृणीहि ॥ ९ ॥ तत उत्थाय हृष्टात्मा मुनिर्विश्वानरः कृती ॥ प्रत्यब्रवीत्किमज्ञातं सर्वज्ञस्य तव प्रभो ॥ १० ॥ सर्वान्तरात्मा भगवान् शर्वः सर्वप्रदो भवान् ॥ याञ्चां प्रति नियुंक्ते मां किमीशो दैन्यकारिणीम् ॥ ११ ॥ इति श्रुत्वा वचस्तस्य देवो विश्वानरस्य ह ॥ शुचेः शुचिव्रतस्याथ शुचि स्मित्वाब्रवीच्छिशुः ॥१२॥ बाल उवाच ॥ त्वया शुचे शुचिष्मत्यां

योऽभिलाषः कृतो हृदि ॥ अचिरेणैव कालेन संभविष्यत्यसंशयः ॥ १३ ॥ तव पुत्रत्वमेष्यामि शुचिष्मत्यां महामते ॥ ख्यातो गृहपतिर्नाम्ना शुचिः सर्वामरप्रियः ॥ १४ ॥ अभिलाषाष्टकं पुण्यं स्तोत्रमेतत्त्वयेरितम् ॥ अब्दं त्रिकालपठनात्कामदं शिवसन्निधौ ॥

इति श्रीस्कंदपुराणे काशीखण्डे विश्वेश्वरस्तोत्रम् ।

अस्य स्तोत्रस्य ( पार्थिवलिङ्गार्चनं कृत्वा तत्सनिधौ संवत्सरं ) जपेन पुत्रप्राप्तिः फलमपि ग्रन्थान्तरे उक्तम् ।

---

# समासोऽयङ्ग्रन्थः ।



## अथ संकल्पे मासानुच्चारः

१ चैत्रमासे । २ वैशाखमासे । ३ ज्येष्ठमासे । ४ अषाढमासे । ५ श्रावणमासे । ६ भाद्रपदमासे । ७ अश्विनमासे । ८ कार्तिकमासे । ९ मार्गशीर्षमासे । १० पौषमासे । ११ माघमासे । १२ फाल्गुनमासे । अमुके अधिकमासे ।

१ शुक्लपक्षे २ कृष्णपक्षे

१ प्रतिपत्तिथौ । २ द्वितीयायां । ३ तृतीयायां । ४ चतुर्थ्यां । ५ पञ्च-

म्यां। ६ षष्ठ्यां। ७ सप्तम्यां। ८ अ-
ष्टम्यां। ९ नवम्यां। १० दशम्यां।
११ एकादश्यां। १२ द्वादश्यां। १३
त्रयोदश्यां। १४ चतुर्दश्यां। १५ पूर्णि-
मायां ३० अमावाश्यायां।

१ भानुवासरे। २ चन्द्रवासरे। ३
भौमवासरे। ४ सौम्यवासरे। ५ गुरु-
वासरे। ७ मन्दवासरे

इति संकल्पे मासाद्युच्चारः

# अथ शिवाथर्वशीर्षः ॥



( शिरउपनिषत् ) ॐ देवा ह वै स्वर्गलोकमायंस्ते रुद्रमपृच्छन् को भवानिति । सो ब्रवीदहमेकः अयममासो-द्वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तोऽव्यतिरिक्त इति ॥ सोऽन्तरादनन्तरं प्राविशद्दिशश्चान्तरं प्राविशत्सोऽहं नित्यानित्योऽव्यक्ताऽव्यक्तोब्रह्माब्रह्माहं प्राञ्चःप्रत्यञ्चोऽहं दक्षिणाञ्च उदञ्चोऽहं मधश्चोर्ध्वश्चाहं दिशश्चप्रतिदिशश्चाहं पुमानपुमानंस्त्रियश्चाहं सावित्र्यहं त्रिष्टुब्जगत्य. ष्टुप्चाहं छन्दोऽहं सत्योऽहं गा.पत्योदाक्षणाग्निराहवनीयोऽहं गौरहं गौर्यहमृगहं

यजुरहं सामाहमथर्वाङ्गिरसोऽहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहं आपोहं तेजोऽहं गुह्यो-हमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं प-वित्रमहमुगश्चबलिश्चपुरस्ताज्योतिरित्यह-मेव सर्वेभ्यो मामेव स सर्वः समायो मां वेद सदेवान्वेद सर्वांश्चवेदान् साङ्गानपि ब्रह्मब्राह्मणैश्च गांसोभिर्ब्राह्मणान् ब्राह्म-णेन हविर्हविषा आयुरायुषा सत्यं सत्येन धर्मेण धर्मं तर्पयामि स्वेन तेजसा ॥ ततो हवै ते देना रुद्रमपृच्छन् ते देवा रुद्रमप-ध्यायन् ते देवा ऊर्ध्वबाहवो रुद्रं उतुवन्ति ॥ १ ॥ ॐ यो वै रुद्रः सभगवान् यश्च ब्रह्मा तस्मै वै नमोनमः ॥ १ ॥ ॐ यो वै० विष्णुस्त० ॥ २ ॥ ॐ यो० स्क-

न्द्र० ॥ ३ ॥ ॐ यो श्चेन्द्रस्त० ॥ ४ ॥
ॐ यो० श्चाग्निस्त० ॥ ५ ॥ ॐ यो०
वायुस्त० ॥ ६ ॥ ॐ यो० सूर्यस्त०
॥ ७ ॥ ॐ यो० सोम० ॥ ८ ॥ ॐ
यो० येऽष्टौगृहास्त० ॥ ९ ॥ ॐ यो०
ये चाष्टौ प्रतिगृहास्त० ॥ १० ॥ ॐ
यो० यश्चभूस्त० ॥ ११ ॥ ॐ यो०
यश्च भुवस्त० ॥ १२ ॥ ॐ यो० यश्च
स्वस्त० ॥ १३ ॥ ॐ यो वै० यश्च म-
हस्त० ॥ १४ ॥ ॐ यो० यो० या च
पृथिवी० ॥१५॥ ॐ यो० यच्चान्तरिक्षं०
॥ १६ ॥ ॐ यो० यो च द्यौ० ॥१७॥
ॐ यो० याश्चाप० ॥ १८ ॥ ॐ यो०
यश्च तेजस्त० ॥ १९ ॥ ॐ यो० यश्च

कालं० ॥ २० ॥ ॐ यो० य मस्त०
॥ २१ ॥ ॐ यो० मृत्युस्तु० ॥ २२ ॥
ॐ यो० यश्चामृतं० ॥ २३ ॥ ॐ यो०
यच्चाकाशं० ॥ २४ ॥ ॐ यो० यच्च
विश्वं० ॥ २५॥ ॐ यो० स्थूलं० ॥
॥ २६ ॥ ॐ यो० यच्च सूक्ष्मं० ॥२७॥
ॐ यो० यच्च शुक्लं० ॥ २८ ॥ ॐ यो०
यच्च कृष्णं० ॥ २९ ॥ ॐ यो० यच्च
कृत्स्नं० ॥ ३० ॥ यो० यच्च सत्यं०
॥ ३१ ॥ ॐ यो वै० यच्च सत्यं ॥३२॥
भूस्ते आदिर्मध्यंभुवस्ते स्वस्ते शीर्षं वि-
श्वरूपोऽसि ब्रह्मैकस्त्वं द्विधात्रिधावृद्धि-
स्त्वं पुष्टिस्त्वं तुष्टिस्त्वं हुतमहुतं दत्तमदत्त
सर्वमसर्वं विश्वमविश्वं कृतमकृतं परमपरं

परायणञ्च त्वम् ॥ अपामसोममृताअमूमा-
गन्मज्योतिरविदामे देवान् ॥ किं नूनम-
स्मान् कृष्णवदराति किमु धूर्तिरमृतं
मर्त्यस्य सूर्यपुरस्तात्सूक्ष्मः पुरुष ॥ सर्वं
जगद्धितं वा एतदक्षरं प्राजापत्यं सौम्यं
सूक्ष्मं पुरुषं ग्राह्यमग्राह्येण भावंभावेन
सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं
वायव्येन ग्रसति तस्मै महाग्रासाय वै
नमो नमः ॥ हृदिस्थाः देवताः सर्वाहृ-
दिप्राणाः प्रतिष्ठिताः ॥ हृदित्वमसि यो
नित्यं तिस्रो मात्राः परस्तु सः ॥ तस्यो-
त्तरतः शिरो दक्षिणतः पादौ यः उत्तरतः
स ओंकारः यः ओंकारः स प्रणवः यः
प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽ-

नन्तः योनन्तस्तत्तारं यतारं तच्छुक्लं य-
च्छुक्लं तत्सूक्ष्मं यत्सूक्ष्मं तद्वैद्युतं तत्परं
ब्रह्म यत्परब्रह्म स एकः यः एकः स
रुद्रः स ईशानः य ईसानः स भगवान्
महेश्वरः ।। ३ ।। अथ कस्मादुच्यते ओं-
कारः यस्मादुच्चार्यमाण एव प्राणानूर्ध्व-
मुत्क्रामयति तस्मादुच्यते ओंकारः। अथ
कस्मादुच्यते प्रणवः यस्मादुच्चार्यमाण
एव ऋग्यजुः सामाथर्वाङ्गिरसं ब्रह्म ब्रा-
ह्मणेभ्यः प्रणामयति नामयति च तस्मा-
दुच्यते प्रणवः।। अथ कस्मादुच्यते सर्व-
व्यापी यस्मादुच्चार्यमाण एव यथा स्नेहेन
पललपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो
व्यतिषिक्तश्च तस्मादुच्यते सर्वव्यापी ।।

अथ कस्मादुच्यऽनन्तः यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चास्यान्तो नोप-लभ्यते तस्मादुच्यतेऽनन्तः अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाणएव गर्भजन्मव्याधिजरामरण संसारमहाभया-त्तारयति त्रायते च तस्मादुच्यते तारं। अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्लन्दते क्लामयति च तस्मादुच्यते शुक्लं। अथ कस्मादुच्यते सूक्ष्मं यस्मादु-च्चार्यमाण एव सूक्ष्मो भूत्वा शरीराण्यधि-तिष्ठति सर्वाणि चाङ्गान्यभिमृश्यति तस्मा दुच्यते सूक्ष्मं॥ अथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एव व्यक्लेमहति तमसि द्योतयतितस्मादुच्यते वैद्युतं। अथ कस्मा

दुच्यते परं ब्रह्म यस्मात् परमपरं परायण
श्च बृहद्बृहत्या बृंहयति तस्मादुच्यते परं-
ब्रह्म। अथ कस्मादुच्यते एकः यः सर्वा
न्प्राणान्सम्भक्ष्य सम्भक्षणेनाजः संसृजति
विसृजति तीर्थमेके व्रजन्ति तीर्थमेके द-
क्षिणाः प्रत्यञ्च उदञ्चःप्राञ्चोऽभिव्रजन्त्येके
तेषां सर्वेषामिह सङ्गतिः साकं स एकोऽ
भूदन्तश्चरति प्रजानां तस्मादुच्यते एकः।
अथ कस्मादुच्यते रुद्रः यस्मादृषिभिर्ना-
न्यैर्भक्तैर्द्रुतमस्य रूपमुपलभ्यते तस्मादु-
च्यते रुद्रः। अथ कस्मादुच्यते ईशानः
यः सर्वान्देवानीशते ईशानिभिर्जननोभिश्च
शक्तिभिः अभित्वाशूरणोनुमोदुग्धाः इव
धेनवः ईशानमस्य जगतः स्वर्दृशमीशान-

मिन्द्रतस्थुष इति तस्मादुच्यते ईशानः । अथ कस्मादुच्यते भगवान्महेश्वरः यस्माद्भान ज्ञानेन भजत्यनुगृह्णाति च वाचं संसृजति विसृजति च सर्वान्भावान्परित्यज्यात्मज्ञानेन योगैश्वर्येण मरतिमहियते तस्मादुच्यते भगवान्महेश्वरः तदेतद्रुद्रचरितं ॥४॥ एषो हि देवः प्रदिशोऽनुसर्वः पूर्वोहजातः स उगर्भे अन्तः स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः एको रुद्रो न द्वितीयाय तस्मै य इमाल्लोकानीशत ईशानिभिः प्रत्यङ्जनास्तिष्ठति चान्तकाले संसृज्य विश्वाभुवनानि गोप्ता यो योनि योनिमधितिष्ठत्येको येनेदं सर्वं विचरति सर्वम् । तमीशानं

वरदं देवमीड्यं निचाय्ये मां शान्तिमत्यन्त मेति । क्षमां हित्वा हेतुजालस्य मूलं बुद्धया सञ्चितं स्थापयित्वा तु रुद्रे । रुद्रमेकत्वमाहुः शाश्वतं वै पुराणमिषमूर्जेण पशधोनुनामयन्तं मृत्युपाशान् । तदेतन्नात्मन्ने तेनार्द्धचतुर्थेन मात्रेण शान्ति संसृजति पशुपाशविमोक्षणं या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्तवर्णेन य स्तां ध्यायते नित्यं स गच्छेद्ब्रह्मपदं ॥ या सा द्वीतीया मात्रा विष्णुदेवत्या कृष्णवर्णेन यस्तां ध्यायते नित्यं सगच्छेद्वैष्णवंपदं । या सा तृतोया मात्रा ईशानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं सगच्छेदैशानपदं । या सार्ध चतुर्थी मात्रा सर्वदेवत्या

ऽव्यक्तीभूता खं विचरति शुद्धा स्फटिक सन्निभा वर्णेन यस्तां ध्यायते नित्यं स-गच्छेत्पदमनामयं तदेतदुपासीत मुनयो वाग्वदन्ति न तस्य ग्रहणमयं पन्थाविहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषयः परमपरं परायणं चेति वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातरूपं वरेण्यं ।। तमात्मस्थं येनुपश्यन्ति धीरास्तेषां शान्तिर्भवति नेतरेषां यस्मिन् क्रोधं याञ्च तृष्णां क्षमाञ्चाक्षमां हित्वा हेतु-जालस्य मूलं बुद्ध्या सञ्चितं स्थापयित्वा तु रुद्रे रुद्रमेकत्वमाहुः रुद्रो हि शाश्वतेन वै पुराणेनेषमूर्जेण त-पसा नियन्तांग्निरिति भस्म वायुरिति

भस्म जलमिति भस्म व्योमेति भस्म सर्वं
हवा इदं भस्म मन एतानि चक्षुंषि यस्मा-
द्व्रतमिदं पाशुयतं यद्भस्म नाङ्गानि सं-
स्पृशेत तस्माद्ब्रह्म तदेतत्पाशुपतं पशुपा-
शविमोक्षणाय ॥ ५ ॥ योऽग्नौरुद्रो यो-
ऽप्स्वन्तर्य ओषधीर्विरुध आविवेश । य
इमा विश्वाभुवनानि चक्लृपे तस्मै रुद्राय वै
नमोनमः । यो रुद्रोऽप्सु यो यो रुद्रऔष-
धीषु यो रुद्रो वनस्पतीषु येन रुद्रेण
जगदूर्ध्वं धारितं पृथिवी द्विधात्रि-
धाधर्ता धारिता नागायेन्तरिक्षे तस्मै
रुद्राय वै नमोनमः । मूर्धानमस्य संसे-
व्याप्ययर्वाहृदयश्च यत् । मस्तिष्कादूर्ध्वं
भेरत्यवभानोऽधिशीर्षतः । तद्वा अथवर्णः

शिरो देवकोशः सुम्नुज्झितः तत्प्राणोऽभिरक्षति शिरोन्तंमथो मनः । न च दिवो देवजनेनगुप्ता न चान्तराक्षराणि न च भूम इमाः । यस्मिन्निदं सर्वमोतमोतं तस्मादन्यत्र परं किञ्चनास्ति न तस्मात्पूर्वं न परंतदस्ति न भूतं नोतभव्यं यदासीत् । सरस्त्रगादेकमूर्ध्नां व्याप्तं स एवेदयाबरीवर्तिं भूतं । अक्षरात्संजायते कालः काळा इव्यापक उच्यते व्यापको हि भगवान् रुद्रो भोगायमानो यदा शेते रुद्रस्तदा संहार्यते प्रजाः । उच्छ्वसिते तमो भवति तमस आपोऽश्वङ्गुल्यामथिते मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति फेनादण्डं भवत्यण्डाद्ब्रह्मा मवति ब्रह्मणो वायुः वायो-

रोङ्कारः ओङ्कारात्सावित्री सावित्र्या गा-
यत्री, गायत्र्या लोका भवन्ति अर्चयन्ति
तपः सत्यं मधुक्षरन्ति यद्ध्रुवं।एतद्धि परमं
तपः आपोज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरो
नमइति। यइदमथर्वशिरो ब्राह्मणोऽधीते।
अश्रोत्रियः श्रोत्रियो भवति। अनुपनीतो
उपनीतो भवति। सोग्निपूतो भवति। स
वायुपूतो भवति। स सूर्यपूतो भवति।
स सोमपूतो भवति। स सत्यपूतो भवति।
स सर्वैर्देवैर्ज्ञातो भवति। स सैर्ववेदैरनु-
ध्यातो भवति। स सर्वेषु तीर्थेषु स्नातो
भवति। तेन सर्वैः क्रतुभिरिष्टं भवति।
स चक्षुषः पङ्क्तिं पुनाति। गायत्र्याः ष-
ष्टिसहस्राणि जप्तानि भवन्ति प्रणवानाम-

युतं जप्तं भवति ॥ आसप्तमात्पुरुषयुगा-
न्पुनातीत्याह भगवानथर्वशिरः सकृज्ज-
प्त्वैव शुचिः सपूतो कर्मण्यो भवति ।
द्वितीयं जप्त्वा गणाधिपत्यमवाप्नोति ।
तृतीयं जप्त्वैवमेवानुप्राविशत्यों सत्यमों
सत्यमों सत्यम् । इत्यथर्ववेद ।

# અથ નવગ્રહમન્ત્ર.

## સૂર્યપૂજનમન્ત્ર.

જપાકુસુમસંકાશં કાશ્યપેયં મહદ્યુતિં ॥ તમોરિં સર્વપાપઘ્નં પ્રણતોસ્મિ દિવાકરં ॥૨॥ वेदोक्तं सबीजमंत्र ॥ अस्य श्रीआकृष्णेति मंत्रस्य हिरण्यसूपाङ्गिरसऋषिः सूर्यो देवता त्रिष्टुपछंदः सूर्यमंत्रजपे० ॥ ॐ ह्रां ह्रीं ह्रौं सः ॐ भूर्भवः स्वः ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ॥ हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन् ॥ ॐ स्वः भुवः भूः ॐ सः ह्रैं ह्रीं ह्रां ॐ सूर्याय नमः ॥ ધ્યાનમંત્ર-ભાસ્વાનકાશ્યપગોત્રજો રૂણરૂચિર્યં સિંહરાશી-શ્વરોષત્રિસ્થો દશશોભનો ગુરૂશશી ભૌમેષુ

મિત્રઃ સદા ॥ શુક્રોમન્દરિપુઃ કલિંગજનિત શ્ચાગ્નિશ્વરૈ। દૈવતે મધ્યે વર્તુલપૂર્વેદિગ્દિનકરઃ કુર્યાત્સદામંગલં ॥ ૧ ॥

## અથ ચંદ્રપૂજનમંત્ર.

દધિશંખતુષારાભં ક્ષીરોદાર્ણવસંભવં ॥ નમામિ શશિનં સોમં શંભોર્મુકુટભૂષણ, **वे-मंत्र-इमन्देवा इति मंत्रस्य वरुण ऋषिसोमो देवता सोममंत्रज० ॥ ॐ श्रां श्रीं श्रौं सः ॐ भूः भुवः स्वः ॐ इमन्देवा असपत्नर्ठं सुवध्वं महते क्षत्राय महते ज्ज्यैष्ठ्यायमहते जानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इममुष्य पुत्रममुष्यै पुत्रमस्यै विशएष वोमी राजा सोमोस्माकं ब्राह्मणानार्ठं राजा ॥ ॐ स्वः भुवः भूः ॐ सः श्रौं श्रीं श्रां ॐ चंद्राय नमः ॥** ધ્યાનમંત્ર ॥ ચંદ્રઃ

કર્કટકઃ પ્રભુઃ સિતનિભશ્ચાત્રેયગોત્રોદ્ભવશ્ચાગ્ને-
યશ્ચતુરસ્નવારૂણમુખશ્ચાપોપ્યુમાધીશ્વરઃ ॥ ૫૮
સમાશ્ચિદશૈકશોભનફલો જ્ઞોરિર્ગુરોર્કાપ્રયઃ સ્વા॰
મીયામુનદેશજોહિમકરઃ કુર્યાત્સદામંગલં

## અથ મંગલપૂજનમંત્ર.

ધરણીગર્ભસંભૂતં વિદ્યુત્કાંતિસમપ્રભં ॥
કુમારં શક્તિહસ્તં તં મંગલં પ્રણમામ્યહં ॥
वे-मंत्र-अग्निर्मूर्धा इति मंत्रस्य विरूपा-
ङ्गिरस: ऋषि: अग्निर्देवता गायत्री छन्द:
भौममंत्र० ॥ ॐ क्रां क्रीं क्रौं स: ॐ
भूर्भुव: स्व: ॐ अग्निर्मूर्धा दिव: ककु-
त्पति: पृथिव्या अयं ॥ अपांद रेतांद
सि जिन्वति ॥ ॐ स्व: भुव: भू: ॐ
स: क्रौं क्रीं क्रां ॐ भौमाय नम: ॥ ધ્યાન
મંત્ર ભૌમોદક્ષિણદિક્ ત્રિકોણયમદિક્ વિંધ્યે-
શ્વરોરક્તાભઃ સ્વામીવૃશ્ચિકમેષયોઃ સુરગુરુશ્ચાર્કઃ

શશીસૌહૃદ॰ ॥ ત્રોરિઃ ષટ્ત્રિફલપ્રદશ્ચવસુધા
સ્કંદૌક્રમાદ્દેવતે ભારદ્વાજકુલોદ્દ્ભવઃ ક્ષિતિસુતઃ
કુર્યાત્સદામંગલં ॥ ૩ ॥

## અથ બુધપૂજનમંત્ર.

પ્રિયંગુકલિકાશ્યામં રૂપેણાપ્રતિમં બુધં ॥
સૌમ્યં સૌમ્યગુણોપેતં તં બુધં પ્રણમામ્યહં ॥
**वे–मंत्र ॥ उद्बुध्य इतिमंत्रस्य परमेष्ठी ऋषिः बुधो देवता त्रिष्टुपछंदः सौम्य-मंत्र० ॥ ॐ ब्रां ब्रीं ब्रौ सः ॐ भूर्भुवः स्वः ॐ उद्बुध्यस्वाग्ने प्रतिजागृहित्वमिष्टापूर्ते सहै सृजेथामयञ्च ॥ अस्मिन्त्सधस्थे अध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत ॥ ॐ स्वः भुवः भूः ॐ सः ब्रौं ब्रीं ब्रां ॐ सौम्याय० ॥ ४ ॥**
ધ્યા૦ મં૦–સૌમ્યો દડ્મુખપીતવર્ણમગધશ્ચા-
ત્રેયગોત્રોદ્દ્ભવઃ બાણેશાનદિશઃ સુહૃચ્છનિ-

ભૃગુઃ શત્રુઃ સદાશીતગુઃ કન્યાયુગ્મ પતિર્દિ-શાષ્ટચતુરઃ ષણ્નેત્રકઃ શોભનો વિષ્ણુઃ પૌરૂષ-દેવતે શશિસુતે કુર્યાત્સદામંગલં ॥ ૪ ॥

## અથ ગુરૂપૂજનમંત્ર.

દેવાનાંચ ઋષીણાંચ ગુરૂં કાંચનસન્નિભં ॥ બુદ્ધિભૂતં ત્રિલોકેશં તં નમામિ બૃહસ્પતિ ॥ वे. मं. ॥ बृहस्पत इति मंत्रस्य गृत्समद ऋषिः ब्रह्मा देवता त्रिष्टुपछंदः बार्हस्पत्य मंत्र० ॥ ॐ ह्रां ह्रीं ह्रौं सः ॐभूर्भुवः स्वः ॐ बृहस्पते अतियदर्यौअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऋतप्रजाततदस्मासु द्रविणं धेहि चित्रं ॥ ॐ स्वः भुवः भूः ॐ सः ह्रौं ह्रीं ह्रां ॐ बृहस्पतये ॥ ધ્યા० ॥ જીવશ્ચાઙ્ગિરસોત્રજોત્તરમુખો દીર્ઘોત્તરાસંસ્થિતિઃ પીતાશ્વત્થસમિચ્ચસિન્ધુજનિત

શ્ચાપોથમીનાધિપઃ ॥ સૂર્યેન્દુક્ષિતિજપ્રિયો
બુધસિતૌ શત્રુસમાશ્ચાપરે સપ્તાર્દ્દ્રિભવઃ શુભઃ
સુરગુરૂઃ કુર્યાસં૦ ॥ ૫ ॥

## અથ શુક્રપૂજનમંત્ર.

હિમકુન્દમૃણાલાભં દૈત્યાનાં પરમં ગુરૂં
સર્વશાસ્ત્રપ્રવક્તારં ભાર્ગવં પ્રણમામ્યહં ॥
वे. मं. ॥ अन्नात्परिस्रुत इतिमंत्रस्य प्रजापतिर्ऋषिः अश्विसरस्वतीन्द्रादेवता जगती छंदः शुक्र० ॥ ॐ द्रां द्रीं द्रौं सः ॥ ॐ भूर्भुवः स्वः ॐ अन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः ॥ ऋतेने सत्यमिन्द्रियं विपानꣳशुक्रमन्धस इन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ॐ स्वः भुवः भूः ॐ सः द्रौं द्रीं द्रां ॐ शुक्राय० ॥ શુક્રો-
ભાર્ગવગોત્રજોસિતનિભઃ પ્રાચીમુખઃ પૂર્વદિક્

પંચાઙ્ગૌ વૃષભસ્તુલાધિપમહારાષ્ટ્રાધિપો દુમ્બર: ॥ ઇન્દ્રાણીમઘવાનુભૌ બુધશની મિત્રાર્કચન્દ્રૌ રિપુશષ્ટૌ દ્વિર્દશવર્જીતો ભૃગુસુત: કુર્યા૦ ॥૬॥

## અથ શનિ પૂજનમંત્ર.

નીલાંજનસમાભાસં રવિપુત્રં યમાગ્રજં ॥ છાત્રામાર્તંડસંભૂતં તં નમામિ શનૈશ્ચરં ॥ **वे॰ मं. ॥ शन्नोदेवी इतिमंत्रस्य दध्य-ङ्ङाथर्वणऋषिः आपो देवता गायत्री छंन्दः शनिः ॥ ॐ खां खीं खौं सः ॐ भूर्भुवः स्वः ॐ शन्नो देवीरभिष्टय आपा भवन्तु पीतये ॥ शं योरभिस्र-वन्तु नः ॥ ॐ स्वः भुवः भूः ॐ सः खौं खीं खां ॥ ॐ शनैश्चराय॰ ॥** ધ્યાન૦ ચન્દ્ર: કૃષ્ણનિભસ્તુ પશ્ચિમમુખ: સૌરાષ્ટ્રક: કાશ્યપ: સ્વામીમાકુમ્ભયોર્બુધસિતૌ મિત્રે સમશ્ચાઙ્ગિરા: ॥ સ્થાનં પશ્ચિમદિક્ પ્રજાપ-

તિયમૌ દેવૌ ધનુષ્યાસનઃ ષટ્ત્રિસ્થઃ શુભકૃ-ણ્છની રવિસુતઃ કુર્યા૦ ॥ ૭ ॥

## અથ રાહુપૂજનમંત્ર.

અર્ધકાર્યં મહાવીર્યં ચન્દ્રાદિત્યવિમર્દનં સિંહિકાગર્ભસંભૂતં તં રાહું પ્રણમામ્યહં વે૦ । ॐ **कयानश्चित्र इतिमंत्रस्य वामदेव ऋषिः राहुदेवता गायत्री छन्दः राहुमंत्र० ॥ ॐ भ्रां भ्रीं भ्रौं सः ॐ भूर्भुव स्वः ॥ ॐ कयानश्चित्र आभुवदूतीसदावृधः सखा ॥ कयाशचीष्ठया-वृता ॥ ॐ स्वः भुवः भूः ॐ सः भ्रौं भ्रीं भ्रां ॐ राहवे नमः ॥** ધ્યાનમંત્ર—રાહુઃ સિંહલદેશજશ્ચનિરૃતિઃ કૃષ્ણાંગશૂર્પાસુનો યઃ પૈઠીનસિગોત્રભમ્ભવસમિદ્દુર્વામુખો દક્ષિણઃ ॥ યઃ સર્પાદ્યધિદેવતે ચ નિઋતિઃ પ્રત્યાધિ દેવઃ સદા ષટ્ત્રિસ્થો શુભકૃચ્ચસિંહિકસુતઃ કુર્યા॥૮॥

## અથ કેતુપૂજનમંત્ર.

પલાશપુષ્પસંકાશં તારકાગ્રહમસ્તકં ॥
રૌદ્રંરૌદ્રાત્મકં ઘોરં તં કેતું પ્રણમામ્યહં ॥
वे. मं. ॥ केतुंकृणवन्नितिमंत्रस्य मधुच्छन्दाऋषिः केतुर्देवता गायत्री छन्दः केतु मं० ॥ ॐ प्रां प्रीं प्रौं सः ॐ भूर्भुवः स्वः ॐ केतुं कृण्वन्न केतवे पेशो मर्याअपेशसे ॥ समुषद्भिरजायथाः ॥ ॐ स्वः भुवः भूः ॐ सः प्रौं प्रीं प्रां ॐ केतवे नमः ॥ ધ્યાન ॥ કેતુર્જૈમિનિગોત્રજઃ કુશસમિદ્વાયવ્યકોણે સ્થિતશ્ચિત્રાંકધ્વજલાંછનો હિમગુહા યો દક્ષિણાશામુખઃ ॥ બ્રહ્માચૈવ સચિત્રચિત્રસહિતઃ પ્રત્યાધિદેવઃ સદા પટ્ત્રિસ્થઃ શુભકૃચ્ચબર્બરપતિઃ કુર્યાત્સદામંગલં ॥ ૯ ॥

ઇતિ નવગ્રહમંત્રો ॥

समाप्तोऽयं ग्रंथः

॥ श्रीगणेशाय नमः ॥

# अथ पंचाथर्वशीर्षपाठो लिख्यते॥

## तत्रादौ गणेशाथर्वशीर्षपाठो लिख्यते ॥

ॐ नमस्ते गणपतये त्वमेव प्रत्यक्षं तत्त्वमसि त्वमेव केवलं कर्तासि त्वमेव त्वमेव केवलं धर्तासि त्वमेव केवलं हर्तासि त्वमेव सर्वं खल्विदं ब्रह्मासि त्वं साक्षादात्मासि नित्यं ऋतं वच्मि सत्यं वच्मि अव त्वं माम् अव वक्तारं अव श्रोतारं अव दातारं अव धातारं अवनूचानमव शिष्यं अव पश्चात्तात् अव पुरस्तात् अवो-

त्तराजात अवदक्षिणाजात अव चोर्ध्वाजात
अवाधराजात सर्वतोमां पाहि पाहि सम-
जात त्वं वाङ्मयस्त्वं चिन्मयः त्वमानंद-
मयस्त्वं ब्रह्ममयः त्वं सच्चिदानंदाद्वितीयो
ऽसि त्वं प्रत्यक्षं ब्रह्मासि त्वं ज्ञानमयो
विज्ञानमयोऽसि सर्वं जगदिदं त्वत्तो जायते
सर्वं जगदिदं त्वत्तस्तिष्ठति सर्वं जगदिदं
त्वयि लयमेष्यति सर्वं जगदिदं त्वयि प्र-
क्षेति त्वं भूमिश्चयोऽनलोऽनिलो नभः त्वं
चत्वर्तरवाक् पदानि त्पं गुणत्रयातीतः
त्वभवस्थात्रयाऽतीतः त्वं देहत्रयातीतः
त्वं कालत्रयातीतः त्वं मूलाधारस्थितोऽ
सि नित्यं त्वं शक्तीत्रयात्मकः त्वां योगीनो
ध्यायन्हि नित्यं त्वं ब्रह्मा त्वं विष्णुस्त्वं

रुद्रस्त्वं इंद्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चंद्रमास्त्वं ब्रह्म भूर्भुवः स्वरों गणादीन पूर्वमुच्चार्य वर्णादीस्तदनन्तर अनुस्वारः परतरः अर्धेन्दुऽलसितं तोरणरुद्धम् एतत्तव मनु स्वरूपं गकारः पूर्वरूपं अकारो मध्यमरूपं अनुस्वारश्चान्त्यरूपं बिन्दुरुत्तररूपं नादः सन्धानं सर्ंहिता सन्धिः सैषा गणेशविद्या गणक ऋर्षः निद्गायत्रीछंदः गणपतिर्देवक्त ॐ गं गणपतयो नमः एकदन्ताय विद्महे वक्रतुंडाय धीमहि तन्नो दंतो प्रचोदयात् ॥ एकदंतं चतुर्हस्तं पाशमंकुशधारिणम् रदञ्च वरदं हस्तै र्बिभ्राणं मुषकध्वजं रक्तं लंबोदरं शूर्पकर्णकं रक्तवाससं रक्तगंधानुलिप्तांगं रक्तकर्षैः

सुकजितं भक्तानुकम्पिनं देवं जगत्कारण
मच्युतं अविर्भूतं च सृष्ट्यादौ प्रकृतेः
पुरुषात्परं एवं ध्यायति यो नित्यं स
योगी योगीनां वरः ॥ नमो व्रातपतये
नमो गणपतये नमः प्रमथपथये नमस्तेऽ
स्तु लम्बोदरायैकदंताय विघ्ननाशिने शिव
सुताय श्रीवरदभूतेय नमः ॥

एतदथर्वशीर्ष योऽधीते स ब्रह्मभू-
याय कल्पते स सर्व विघ्नैर्न बाध्यते स
सर्वज्ञः सुख मेधते स पञ्चमहापापाऽप्र
मुच्यते सावमधीयानो दिवसकृतं पापं
नाशयति प्रात रधीयानो रात्रीकृतं पापं
नाशयति ॥ सायं प्रातः प्रयुञ्जानो अ-
पापो भवति सर्वत्राधीयानोऽपविघ्नोभवति

॥ धर्ममर्थं काममोक्षंच विन्दति ॥ इदमथ र्वशीर्षमशिष्यायनदेयं ॥ यो यदि माहा- द्दास्यति स पापीयान भवति सहस्रावर्तनाद्य यं यं काममधीते ॥ तंत मनेन साधयेत् ॥ अनेन गणपतिर्माभसिञ्चति सर्वाग्म भवति ॥ चतुर्थ्यामनश्नञ्जयति सविद्यावान् भवति ॥ इत्यथर्वण वाक्यम् ॥ ब्रह्माद्या- वरणं विद्यान्न विभेति कदाचन यो दुर्वां कुरैर्यजति स वै श्रवणोपमो भवनि यो ऽगजैर्यजाति स यशोवान् भवति स मे- धावान् भवति यो मोदकसहस्रेण यजति स वाञ्छितफल भवाप्नोति ॥ यः साज्यं सामद्भिर्यजति स सर्वंलभेत सलभते ॥ अष्टौ ब्राह्मणान् सम्यक् ग्राहयित्वा सूर्य-

वर्चस्वो भवति ॥ सूर्य ग्रहेण महानद्यां प्रतिभासन्निधौ वा जप्त्वा सिद्धमंत्रो भवति ॥ महाविघ्नात् प्रमुच्यते ॥ महादोषात्प्रमुच्यते महाप्रत्यवायान् प्रमुच्यते ॥ स सर्व विद्भवति स सर्वविद्भवति ॥ य एवं वेद ॥ इत्युपनिषद् ॥

## अथ नारायणार्थ शीर्षं

अथ पुरुषो हवै नारायणोऽकामयत प्रजाः सृजेयेति ॥ न रायणात्प्राणो जायते मनः सर्वेन्द्रियाणिच खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ नारायणाद्ब्रह्मा जायते नारायणाद्विष्णुर्जायते नारायणाद्रुद्रो जायते नारायणादिन्द्रोजायते नारा-

यणात्प्रजापतिः प्रजायते नारायणातद्वाद-
शादित्याः रुद्रावसवः सर्वाणि छन्दांसि
नारायणाद्देवाः समुत्पद्यन्ते नारायणात्
प्रवर्तन्ते नारायणे प्रलीयन्ते अथादित्यो
नारायणः ब्रह्मा नारायणः शिवश्च नारा-
यणः शक्रश्च नारायणः कालश्च नारायणः
दिशश्च नारायणः अर्ध्व च नारायणः
अधश्च नारायणः अंतर्वहिश्च नारायणः
नारायण एवेदꣳ सर्वं यद्भूतं यच्च भाव्यं
निष्कलो निरञ्जनो निर्विकल्पो निराख्यातः
शुद्धो देव एको नारायणो न द्वीतीयोऽ
स्ति कश्चित् य एवं वेद स विष्णुरेव
भवति स विष्णुरेव भवति ॐ इसग्रे व्या-
हरेत् नमः इति पश्चात्तात् ॥ नारायणेत्यु-

परिष्टात् ॐ इत्येकारम् नम पति द्वे अक्षरे नारायणायेति पञ्चाक्षराणि एतद्वैनाराय-णस्याष्टाक्षरं पदेमध्येति अनुपब्रतः सर्व-मायुरेति विन्दते प्रजां रायस्पोषं गोपत्यं ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपं अकार उकारो मकार इति तानेकधा संयोज्य तदेव तदोमिति यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् ॐ नमो नारायणा-येनि मंत्रोपासकः वैकुण्ठभुवनं गच्छति तदिदं परमं कण्डरीकं विज्ञानघनं तस्मा-त्तरिदाभमात्रं ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनो सर्वं भूतस्थमेकं वै नारायणं कारणरूपं परब्रह्मकं

एतदथर्वशीर्षं योऽधीते सायमधीया-
नादिवसकृतं पापं नाशयति प्रातरधीयानो
रात्रिकृतं पापं नाशयति सायंप्रातः प्रयु-
ञ्जानो अपापो भवति मध्यन्दिनमादित्याभि
मुखोऽधीयानः सद्यः पञ्चमहापापादु प-
यातकेभ्यो मुच्यते सर्वं वेदपारायणपुण्यं
लभते श्रीनारायणसायुज्यमवाप्नोति ॥
य एवं वेद ॥ इत्युपनिषद् ॥

# अथ सूर्याथर्वशीर्षं

अथ सूर्याथर्वशीर्षं व्याख्यास्यामः ब्रह्मा ऋषिः आदित्यो देवता गायत्री छन्दः हंसाद्याग्नेनारायणयुक्तं बीजं हृल्लेखा शक्तिः द्विपदादि सर्गसंयुक्तं कीलकं धर्मार्थकाममोक्षेषु जपे विनियोगः षट्स्वरारूढवीजेनषडङ्गं रक्ताम्बुजसंस्थितं सप्ताश्वरथिनं हिरण्यवर्णं चतुर्भुजं पद्मद्वयाभयवरदहस्तं कालचक्रप्रणेतारं च श्रीसूर्यनारायणं य एवं वेद स वै ब्राह्मणाः ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं

भर्गो देवस्य धीमहिधियोनः प्रचोदयात् ॥
परोरजसेसावदों ॐ आपोज्योतिरसोमृतं
ब्रह्म भूर्भुवः स्वरोम् ॥ सूर्य आत्मा जग
तस्थुपश्च सूर्योद्वै खल्विमानी भूतानि
जायन्ते सूर्याद्यज्ञाः पर्जन्योऽन्नमातानमस्ते
आदित्याय त्वमेव केवलं कर्ताऽसि त्वमेव
प्रत्यक्षं विष्णुरसि त्वमेवप्रत्यक्षं ब्रह्मासि
त्वमेव प्रत्यक्षं रुद्रोऽसि त्ववमेवप्रत्यक्ष
मृगसि त्वमेवप्रत्यक्षं यजुरसि त्वमेवप्रत्यक्षं
सामासि त्वमेव प्रत्यक्षं मथर्वासि त्वमेव
सर्वं छन्दोसि आदित्याद्वायुर्जायते ॥
आदित्याद्भूमिर्जायते आदित्यादापो जा-
यन्ते आदित्याज्ज्योतिर्जायते आदित्याद्व्यो

मदिशो जायन्ते आदित्याद्वेदा जायन्ते
आदित्याद्देवा जायन्ते आदित्यो वा एष
एतन्मण्डल जपति असावादित्यो ब्रह्म
आदित्योऽन्तःकरणमनोबुद्धिचित्ताहंकाराः
आदित्यो वै व्यानसमानोदानापानप्राणाः
आदित्यो वै श्रोत्रत्वक्चक्षुरसनानासाः
आदित्यो वै वाक्पाणिपादोपस्थपायूनि
आदित्यो वै शब्दस्पर्शरूपरसगन्धाः
आदित्यो वै वचनादानगमनानन्दविसर्गाः
आनन्दमयो ज्ञानमयो विज्ञानमय आदित्यः
नमो मित्रायभानवे मृत्योर्मा पाहि भाजि-
ष्णवे विश्वहेतवे नमः सूर्यान्नोदवस्यातु
वातो अन्तरिक्षात् अग्निर्नः पार्थिवेभ्यः
सूर्याद्भवन्ति भूतानि सूर्येण पालितानितु

सूर्येऽस्तयं प्राप्नुवन्ति यः सूर्यः सोहमेवच
चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः
चक्षुर्धातादधातुनः आदित्याय विद्महे
सहस्रकराय धीमहि तन्नः सूर्यः प्रचोद्-
यात् सविताधरात्तात सवितानः सुवतु
सर्वतातिम् ॥ सविता नो रासतां दीर्घ-
मायुः ओमित्येकाक्षरं ब्रह्म घृणिरिति द्वे-
अक्षरे सूर्य इत्यक्षरद्वयं अदित्य इति त्रिण्य-
क्षराणि एतद्वै सूर्यस्योष्टाक्षरं मन्त्रं यः
सदाहरहर्जपति सोब्रह्मण्यो ब्राह्मणो भवति
सूर्याभिमुखं जप्त्वा महाव्याधिभयात्मुच्यते
अलक्ष्मीर्नश्यति अभक्ष्यभक्षणात्पूतोभवति
अपेयपानात्पूतो भवति अगम्यागमनात्
पूतो भवति व्रात्यसम्भाषणात् पूतो भवति

मध्यान्हे सूर्याभिमुखः पठेत सद्यः पञ्च महापापात् मुच्यते सैषा सावित्री विद्या न कस्यचित् प्रशंसेत् एतन्महाभागः प्रातः पठति सभाग्यवान् जायते पशून् विन्दते वेदार्थं लभते त्रिकालं जप्त्वा क्रतुकात-फलं प्राप्नोति हस्तादित्ये जपति समहा-मृत्युं जरति ॥ य एवं वेद ॥ इत्युपनिषद् ॥



# अथ देव्यथर्व शीर्षम्

ॐ सर्वे वै देवाः देवीमुपतस्थुः कासि त्वं महादेवी साब्रवीदहं ब्रह्मस्वरूपिणी मत्तः प्रकृत्ति पुरुषात्मकं जगत् शून्यं चाशून्यं च अहमानन्दानानन्दौ अहं विज्ञानाविज्ञाने अहं ब्रह्माब्रह्मणी द्वेब्रह्मणी वेदितव्ये इति वा थर्वणी श्रुतिः अहं पञ्चतन्मात्राणि अहमखिलं जगत् वेदोहमवेदोहं विद्याहमविद्याहं अजाहमनजाहं अधश्चोर्ध्वं च तिर्यक्चाहं अहं रुद्रैभिर्वसुभिश्चरामि अहमादित्यैरुतविश्वदेवैः अहं मित्रावरुणावुभौ बिभर्मि अहमिन्द्राग्नि अहमश्विना उभौ अहंसोमं त्वष्टारं पूषणं

भगं दधामि अहं विष्णु रुरुक्रपम् ब्रह्मा-
णमुत्प्रजापतिं दधाम्भि द्रविणर्ढं हविष्मत
सुप्राव्ये यजमानाग सुव्रते अहर्ढं राज्ञी
सङ्गमनी वसूनाम् चिकितुषी प्रथपा यज्ञि-
यानाम् अहर्ढं सुवेपितरमस्य मूर्च्छन्मम
योनिरप्स्वान्तः समुद्रे य एवं वेद सदैवीं
संपदमाप्नोति ते देवा अब्रुवन् नमोदेव्यै
महादेव्यै शिवायै सततं नमः नमः प्रकृत्यै
भद्रायै नियताः प्रगताः स्म ताम् तामग्नि-
वर्णां तपसाज्वलन्तीं वैरोचनीं कर्म फलेषु
जुष्टां दुर्गां देवीं शरणं प्रपद्यामहे असुरा-
न्नाशयित्र्यै ते नमः देवीं वाचमजनयन्त
देवास्तां विश्वरूपाः पशवो यदन्ति सानो
मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपष्ठुतैतु

कालरात्रीं विष्णुसुतां वैष्णवीं स्कन्दमातरं सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवां महालक्ष्म्यै च विद्महे सर्वशक्त्यै च धीमहि तन्नो देवी प्रचोदयात् अदितिर्ह्य-जनिष्ठदक्षया दुहिता तव तां देवा अन्व-जायन्ते भद्रा अमृतबान्धवः कामे योनिः कमला वज्रपाणिर्गुहाहंसामातरिश्वाभ्रमि-न्द्रः पुनर्गुहा सकलायया चापृथक्क्लेशा विश्वमातादिविद्याः एषात्मशक्तिः एषा-विश्वमोहिनी पाशाङ्कुशधनुर्बाणधरा एषा-श्रीमहाविद्याः य एवं वेद स शोकं तरति नमस्ते भयवति मातरस्मान्पाहि सर्वतः सैषा वैष्णवा वसवः सैवैकादश रुद्राः

सैषा द्वादशादित्याः सैषाविश्वेदेवाः सो-
मपा असोमपाश्च सैषा यातुधाना असुरा
रक्षांसि पिशाचयक्षसिद्धाः सैषा सत्वरज
स्तमांसि सैषा ब्रह्मविष्णुरुद्ररूपिणी सैषा
प्रजापतीन्द्रमनवः सैषा ग्रहनक्षत्रज्योति-
ष्कलाकाष्ठादिविश्वरूपिणी तामहं प्रणौमि
नित्यम् पापापहारिणी देवी भुक्तिमुक्ति
प्रदायिनी अनन्तां विजयांशुद्धां शरण्यां
सर्वदा शिवां वियदाकारसंयुक्तां । वीति-
होत्रसमन्वितं अर्द्धेंदुलसितं देव्या बीजं
सर्वार्थसाधकम् एवमेकाक्षरं मंत्रं यतयः
शुद्धचेतसः ध्यायन्ति परमानन्दमया
ज्ञाताम्बुराशयः वाङ्मया स्वयंभूस्तस्मात्

षष्ठवङ्कसमन्वितं सूर्यो वामश्रोत्र विन्दु-
संयुक्ताष्टतृतीयकम् नारायणेन संमिश्रो
वायुश्चाधारयुक्तव: विच्चेनवार्णकोणस्य
महानानंददायक: हत्पुण्डरीष्ठमध्यस्थांप्रात:
सूर्यसमप्रभां पाशाङ्कुशधरांसौम्यांवरदा-
भवहस्तकां त्रिनेत्रां रक्तवसनां भक्तकाम
दुहं भजे भजामित्वां महादेवो महामोहवि
नाशिनी महादग्रिघ्नशमनी महाकारुण्यरु-
पिणी यस्या: स्वरूपं देवादयोनजानन्ति
तस्मादुच्यते अज्ञेया यस्या अन्तो न
लभ्यते तस्मादुच्यते अनन्ता यस्या लक्षं
नोपलभ्यते तस्मादुच्यते अलक्षा यस्या
जननं नोपलक्ष्यते तस्मादुच्यते अजाएकैव
सर्वत्रवर्तते तस्मादुच्यते एकाएकैव विश्व-

रूपिणी तस्मादुच्यते अनेका अतएवोच्य-
तेऽज्ञेयानन्तालक्षाजैकानेका मन्त्राणांमातृ-
कादेवोशब्दानां ज्ञानरूपिणी ज्ञानानां चि-
न्मयातीता शून्यानां शून्य साक्षिणी
यस्याः परतरं नास्ति सैषादुर्गा प्रकीर्तिता
तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीं
नमामिभवभीतोऽहं संसारार्णवतारिणी ॥

इदमथर्वशीर्षं योऽधीते स पञ्चाथर्व
शीर्षफलंप्राप्नोति इदमथर्वशीर्षमज्ञात्वा यो
र्चांस्थापयति शतलक्षं प्रजप्तापिनार्चाशुद्धिं
च विन्दति शतमष्टोत्तरंचास्य पुरश्चास्य-
विधिः स्मृतः दशवारं पठेद्यस्तु सद्यः पापैः
प्रमुच्यते महादुर्गाणि तरति महादेव्याःप्रसा-

द्तः सायमधीयानोदिवस कृतं पापं नाश
यति प्रातरधीयानो रात्रीकृतं पापं नाश-
यति सायंप्रातः प्रयुंजानो अपापो भवति
निशीथे तुरीये संध्यायां जह्वा वाक्सिद्धि
र्भवति नूतनायां प्रतिभाया जप्तवा देवता
सान्निध्यं भवति भौमाश्विन्यां महादेवीसं-
न्निधौ जप्त्वा महामृत्युंजयति स महामृत्युं
जयति ॥ इत्येवं वेद ॥ इत्युपनिषद् ॥

इति पञ्चाथर्व शीर्ष पाठः ॥



પ્રત ૧૦૦૦ સને ૧૯૨૩.

આ ચોપડી અમદાવાદ શામળાની પોળ પાસે વસંત મુદ્રણાલયમાં ચીમનલાલ ઇશ્વરલાલ મહેતે છાપ્યું અને શ્રી ધીરજલાલ વેલાભાઈ બૅંકરે તેજ ક પ્રકટ કર્યું.